# संस्कृत-वार्ता:

**दिनाङ्क: - 22-11-2020** **सायं - 06 : 20**

**मुख्यवार्ता:**

- प्रधानमन्त्रिणा मोदिना स्पष्टीकृतं यत् उत्तरप्रदेशे पेयजलापूर्ति परियोजनान्तर्गतं षष्ठी लक्षोत्तर-द्विकोट्यधिकजना: गत पञ्चदश मासेषु जलप्रणालिकया गृहेषु जलं प्राप्तवन्त:।
- प्रधानमन्त्री श्रीनरेन्द्रमोदी उत्तरप्रदेशे विभिन्ना: ग्रामीण-पेयजलापूर्ति-परियोजना: न्यस्तवान् । तेन प्रोक्तं विन्ध्याचल-बुन्देलखण्डयो प्रत्येकं जन: शीघ्रमेव पेयजलं अवाप्स्यति इति।
- कोविड नाइन्टीन इति वैश्विक संक्रमणं अपाकर्तुं केन्द्रप्रशासनं सन्नद्धम् हिमाचलप्रदेश-पञ्जाब-उत्तरप्रदेशराज्येषु निरीक्षणदलानि सम्प्रेषितानि ।
- ए.टी.पी. फाइनल्स् इति टेनिस् स्पर्धामालिकायां राफेल नडाल् नोवाक योकोविच् पराभूतौ। अद्य निर्णायक चक्रे डोमिनिक थियेम इत्येनं डेनिल मेदवेदेव इत्येनं च अन्तरा द्वन्द्व:।

--------

**पीएम-विंध्याचल प्रोजेक्ट**

प्रधानमन्त्री नरेन्द्र मोदी अद्य उत्तरप्रदेशस्य विन्ध्याचलक्षेत्रान्तर्गतं मिर्जापुर-सोनपुर-जनपदयो: ग्रामीण-पेयजल-आपूर्ति परियोजनाया: दृश्य-श्रव्य परान्तर्जालीय माध्यमेन आधारशिला न्यस्ता। प्रधानमन्त्रिणा मोदिना अवसरेऽस्मिन् ग्रामीण-जल-स्वच्छता-समिते: सदस्यै: साकं वार्ता अपि सम्पादिता। प्रधानमन्त्रिणा प्रोक्तं यत् उत्तरप्रदेशे आभि: योजनाभि: हर-घर नल-जल परियोजनायां प्रगति: भविता। सममेव प्रधानमन्त्रिणा विन्ध्याचल क्षेत्रे त्रयोविंशति: जलपेय परियोजनानां आधारशिला संस्थापिता। प्रधानमन्त्री मोदी अवादीत् यत् इयं परियोजना न केवलं शुद्धं जलं प्रापयिष्यति अपितु बहून् रोगानपि अपवारयिष्यति इति। प्रधानमन्त्रिणा स्पष्टीकृतं यत् स्वतन्त्रता-अवाप्त्यानन्तरं कमपि एकं क्षेत्रं उपेक्षितं आसीत् तत् वर्तते इदं क्षेत्रम्। तेन प्रोक्तं आगामि काले यदा पञ्चत्रिंशत् शतं ग्रामा: जलापूर्ति-परियोजनया अनया लाभान्विता: भविष्यन्ति तदा चत्वारिंशत् लक्ष जनानां जीवनं परिवर्तयिष्यते इति। तेन स्पष्टीकृतं यत् अनेन लक्षश: जना: स्वीय गृहे जलं अवाप्स्यन्ते इति। संसाधनानां सत्यपि विन्ध्याचलं भवतु वा बुन्देलखण्डं, इमे क्षेत्रे नैयून्य क्षेत्रे सम्वृत्ते। श्रीमोदी अवादीत् यत् हर-घर जल इति परियोजनाया: एकं वर्षं व्यतीते सति षष्टिलक्षाधिक-द्विकोटि-परिवारेभ्य: तत् तत् गृहेषु पेयजल-सौविध्यम् सुलभायितम्। अवधेयास्पदं तथ्यमिदं यत् प्रतिशतं त्रीणि अष्ट दशमलवोत्तर पञ्चपञ्चाशत् उत्तर-पञ्चशताधिक-पञ्चसहस्रं कोटि रूप्यकात्मकाभि आभि: योजनाभि: तत्रत्य द्विचत्तवारिंशत् लक्षजना: स्वच्छ जलं प्राप्नुवन्ति।

-----------

**कोविड नेशनल अपडेट**

कोरोना इति वैश्विक संक्रमणं विरुध्य अखिलेऽपि देशे निर्णायकं युद्धं प्रवर्ततेतराम्। साम्प्रतं देशे पञ्चचत्वारिंशत् सहस्राधिक-नूतन प्रकरणै: साकं देशे सप्ताधिक-अष्टशतोत्तर-पञ्चनवति-सहस्रोत्तर-नवति-लक्षप्रकरणानि वर्तन्ते, येषु सपाद पञ्चाशीति लक्षाधिका: जना: स्वस्थताङ्गता:। विगते अहोरात्रे एकाधिक पञ्चशतं जना: अनेन मृत्युम् उपेता:। देशे प्राय: चत्वारिंशत् सहस्रोत्तर-चतुरलक्ष सक्रिय प्रकरणानि वर्तन्ते।

-----------

**दिल्ली कोविड**

देशस्य राजधान्यां दिल्ल्यां कोविडमहामारी संक्रमण-तीव्रतां दृष्टिपथं निधाय केन्द्रप्रशासनस्य राज्यप्रशासनस्य च शासकीय इतरप्रशासकीय चिकित्सालयेषु पञ्चोत्तरद्विशतं गहनचिकित्सा विभागे रूग्ण शय्यासु वृद्धि: कृता। गृहमन्त्रालयेणोक्तं यत् केन्द्रप्रशासनस्य चिकित्सालयेषु दिल्ली स्थिते अखिल-भारतीययुर्विज्ञानसंस्थाने ऑक्सीजन सुविधापूर्णा: शय्यानां संख्यासु अपि षोडशाधिक एकशतमितस्य विवर्धनं जातम्।

--------

**सेन्ट्रल टीम्स**

केन्द्रप्रशासनं हिमाचल-प्रदेश-पञ्जाब-उत्तर-प्रदेश-चेति राज्येषु कोविड-प्रबन्धनाय उच्चस्तरीय दलानि सम्प्रेषयत्। ध्यानास्पदं तथ्यमिदं यत् एतेषु राज्येषु कोरोना इति वैश्विक-संक्रमणस्य प्रकरणानि तीव्रगत्या उपचीयन्ते इति

त्रिसदस्यात्मकं केन्द्रीय दलं संक्रमणग्रस्त क्षेत्राणां निरीक्षणं विधास्यति इति। इमानि दलानि संक्रमणम् अवरोद्धुं, निरीक्षणं, प्रतिदर्शपरीक्षणं, संक्रमणग्रस्त-रोगिभ्य: उपचार्यमाणावधौ चिकित्सासौविध्यं चेति विषयेषु राज्येभ्य: सहयोगं उपपादयिष्यन्ति इति। केन्द्रीय दलानि इमानि संक्रमणात् स्वास्थ्यलाभं प्राप्तवतां जनानां निरीक्षणं अवधानता विषये अपि परामर्शं करिष्यन्ति। अवधेयास्पदं तथ्यमिदं यत् इत: प्राक् हरियाणा-राजस्थान-गुजरात-मणिपुर-छत्तीसगढ-चेति राज्येष्वपि एतादृशानि उच्चस्तरीय-केन्द्रीय-दलानि सम्प्रेषितानि सन्ति।

--------

**जावडेकर हैदराबाद**

केन्द्रीय सूचना-प्रसारण मन्त्री भाजपा दलस्य वरिष्ठो नेता च प्रकाश जावडेकर: अचकथत् यत् एतत् हैदराबाद-वास्तव्यै: विनिर्णीतव्यम् अस्ति यत् ते महापौर निर्वाचने टीआरएस इति दलस्य भष्टाचारिणं प्रतिनिधिं चेष्यन्ति उत वा भारतीय जनता पार्टी इति दलस्य तं प्रतिनिधिं चेष्यन्ति यो हि स्वीय वचनं सम्यक् तया परिपालयिष्यति इति।

-----------

**निशंक अवार्ड**

देशस्य केन्द्रीय-शिक्षामन्त्रि-डॉ. रमेश पोखरियाल निशंकाय ह्य: ब्रिटेनस्य प्रतिष्ठित संस्थाद्वारा वातायन-शिखर-सम्मान: समुपायनीकृत:। सम्मानोऽयं डॉ. पोखरियालाय तस्य साहित्यिक-विशिष्टोपलब्धये दृश्य-श्रव्य अन्तर्जालीय माध्यमे समायोजितानुष्ठाने वितरित:। डॉ. पोखरियालस्य साहित्य-सर्जन-संसार: विशालतम: वर्त्तते। अस्य साहित्यस्य पञ्च-दशाधिकासु वैदेशिक-भाषासु अपि जातोऽस्ति अनुवाद:। सम्मान-ग्रहणात् परं अमुना न्यगादि यत् तस्य साहित्यिक-रचनासु राष्ट्रप्रेम, संघर्ष:, समर्पणम्, संकल्पश्चेति मानव-समाजोत्थानपरा: संवेदनशीला: कोमला: भावना: सन्ति प्रस्फुटीकृता:।

--------

**मुलायम सिंह**

प्रधानमंत्री नरेन्द्र मोदी अद्य समाजवादी पार्टीति दलस्य नेता मुलायम सिंह यादवेन सह वार्ता कृतवान् एवञ्च तस्मै जनिदिनावसरे वर्धापनानि प्रदत्तानि। स्वीय-ट्वीटालेखे श्री मोदिना उक्तं यत् मुलायम सिंह यादव: देशस्य-वरिष्ठतम: अनुभवी नेता च अस्ति, येन कृषि-ग्रामीण विकासस्य क्षेत्रेषु बहूनि कार्याणि सम्पादितानि।

--------

**चेन्नई रिजर्वोयर**

सर्वेषु प्रमुख जलाशयेषु ये चेन्नई नगरस्य जल-आवश्यकतां सम्पूरयन्ति तेषु जलाशयेषु अतिवृष्टिकारणात् जलं उपचीयते। सममेव केन्द्रीयगृहमन्त्रिणा अमितशाहेन ह्य: तिरूवल्लुर जनपदस्य प्रतिवेशि थरवोई कंदिगई ग्रामे नव-जलाशय: उपायनीकृत:।

--------

**एटीपी फाइनल्स**

ए.टी.पी. फाइनल्स् इति व्यावसायिक-टेनिस-संघ-स्पर्धामालिकाया: निर्णायक चक्रे अद्य विश्वस्य तृतीय मानाङ्कधारक: डोमिनिक-थियेम इत्येनं अपि च डेनिल-मेदवेदेव इत्येनं च अन्तरा निर्णायक-स्पर्धा स्पर्धते। आस्ट्रिया देशीय थियेम् इत्यसौ लंदन नगरे विश्वस्य प्रथम- मानाङ्कधारकं नोवाक् योकोविच् इत्येनं पराभूय द्वितीयवारं निर्णायकचक्रं प्रविष्टोऽस्ति। अपरत: रूसदेशीय: डेनिल् मेदवेदेव् इत्यसौ विंशातिवारं ग्रैण्डस्लैम विजेतारं राफेल नडाल इत्येनं पराभूय निर्णायकचक्रे स्थानं समधिगच्छत् इति।

--------

**॥ इति वार्ता: ॥**